# मृद्वीका

## (अभिनवगीतसंकलनम्)

उद्गाता

मिश्रोऽभिराजराजेन्द्रः

प्रयागविश्वविद्यालयीयसंस्कृतविभागे

प्रवाचकपदमलङ्कुर्वाणः

वैजयन्त प्रकाशन

इलाहाबाद

□ प्रकाशक
वैजयन्त प्रकाशन
८, बाघम्बरी मार्ग, इलाहाबाद ।


रीडर, संस्कृतविभाग
इलाहाबाद विश्वविद्यालय ।

□ प्रकाशनवर्ष
जनवरी, १९८५ ई०
प्रथम संस्करण ।

□ मूल्य : पन्द्रह रुपए ।
संशोधित मूल्य :
5.0 = 00

□ मुद्रक
शुभचिन्तक प्रेस
३१३ बस्की खुर्द, दारागंज, इलाहाबाद ।

# MRDVEEKA

( A Collection of the latest Sanskrit lyrics )

Recites

Abhirāja Dr. Rājendra Mishra

Reader in Sanskrit

University of Allahabad

Vaijayanta Prakashana

Allahabad

□ Publisher
**Vaijayant Prakashan**
8 Baghambari Road, Allahabad



□ Publication-year
January 1985.
First Edition

□ Price : Fifteen Rupees.

5.0 = 00

□ Printed at
**Shubhchintak Press**
Daraganj, Allahabad

## Mrdveeka : The new collection

The new collection of my fifty three Sanskrit lyrics is now being published under the title Mridveeka. My friends have certainly heard several poems of this anthology through the Radio and Television transmissions, time to time. From that point of view this collection will provide an intrins ic cheerness of the close recognition to them along with the literary enjoyment.

The lyrics have been arranged in this collection under six sub-titles namely Namasya, Rupshree, Ritushree, Jijivisha,

Rashtrashree and Prakirna. These titles fully denote and clarify the tendency of the poems and the themes included therein.

I am sure that this collection will also gain the favour of Sanskrit scholars, readers and general Sanskrit-loving persons, just like my previovs. works. With these humble words I dedicate this Kāvya-Pāka in the holy lotus-feet of Sarasvati, the goddess of knowledge nnd education.

8 Baghambari Road
Allahabad.
Vasant Panchami, 1985.

—**Rajendra Mishra**

१। प्रथमा गीतिः ।।

त्वमसि जननि ! शरणम् !!
त्वमसि जीवितम्
जीवितलक्ष्यम्
त्वमसि मदुपकरणम् !!

त्वत्करकमलसुशोभितमालामुक्ताफलतुलितम् !
निश्चप्रचमायुष्यदिनम्मे काव्यकलाकलितम् !!

नाहममर्त्यो नैव शतायुर्नापि विभुः प्रभवे !
त्वत्कलहंससमं मम सुयशस्तिष्ठतु तदपि भवे !!

देवि सरस्वति ! सारय कवन देहि तनुजमानम् !
श्वासान्तं यावत्प्रभवेन्मे हरिहरगुणगानम् !!

काव्यमये मयि पुनर्जीवनं कलयतु कल्याणी !
कालिदासजयदेवसुधामुखजगन्नाथवाणी !!

मम विचिन्तितम्
शिवसमन्वितम्
भवतु बुधाभरणम् !
त्वमसि जननि ! शरणम् !!

## ॥ द्वितीया गीतिः ॥

वितर वितर ननु मातः सिद्धिम् !!
कलितकरुणया वारय विपदं
सारय सकलसमृद्धिम् !!

विधिवदनाम्बुजहंसि सरस्वति ! देहि कवनमभिरामम् !
मधु रसनायां हृदि शुभभावं चिरमाधेहि ललामम् !!

व्यासाम्बुधिजृम्भणविधुलेखे ! दीपय जीवनगेहम् !
राधामाधवचरणकमलयुगमधुना सज्जय देहम् !!

इन्दिन्दिरमाणवकसन्निभो ननु निरपेक्षं सहजम् !
भ्रमन् रौमि सततं भवाटवीमध्येऽहं प्रतिकुसुमम् !!

मोहकलुषबुद्धिभ्रममर्दिनि !
वर्धय सुचरितवृद्धिम् !
वितर वितर ननु मातः सिद्धिम् !!

॥ तृतीया गीतिः ॥

जननि सुहासिनि बुद्धिविकासिनि !
हंसविलासिनि ! धारय रे !
द्रुतमपसारय मोहतमो मम
मूढमनोऽपि विसारय रे !!

व्यञ्जनमशितं फलमपि भुक्तम्
पीतं पानकमपि मधुयुक्तम्
तदपि विशेषो हृदि परितोषो
जातो नहि सन्धारय रे !!

सुखकणिकाऽपि न कटुसंसारे
विनिमज्जामि नु पारावारे
प्रभवति मरणं त्वं भव शरणं
भुवि विलुठन्तं वारय रे !!

विरचय रचनां घटय सुघटनाम
कोमलकान्तपदावलिकलनाम्
स्फुरतु शिखरिणी मम कवितायां,
रसराजं ह्यभिसारय रे !!

## ।। चतुर्थी गीतिः ।।

अयि जननि ! शमय परितापम् !
श्रितहरिचरणे
विनिहतमरणे
सुरधुनि ! विकलय मम पापम् !!

नारायणपदपंकजजनिता ब्रह्मकमण्डलुजाता
विधुशेखरकलकुन्तलमुषिता नृपतिभगीरथमाता

त्रिभुवनतारिणि
भवभयहारिणि
अपनय करुणामयि शापम् !!

भूरितिरस्कृतशापिततापितमनुजानां त्वं पात्री
अयुतनियुतजननार्जितपुण्यैर्भवसि समेषां धात्री

प्रवहसि नितराम्
पावयसि धराम्
वितरसि ननु विभवकलापम् !!

सलिलं जननि ! चुलुकपरिपेयं झटिति पुनाति शरीरम्
दूरत एव सुदर्शनमात्रं कृन्तति बन्धगभीरम्

तव संस्मरणम्
तव तटवरणम्
शरणं प्रददाति दुरापम् !!

स्मारं स्मारं तव महिमानं दुरितेभ्यो न बिभेमि
त्वां प्रणमामि जपामि सुरेश्वरि ! सततं त्वामहमेमि

मामपि तारय
मामपि धारय
सारय भगवति ! तनुतापम् !!

त्वं जननी जनकस्त्वं भ्राता त्वमसि देवि ! मम बन्धुः
जीवनतरणीसन्तरणार्थं त्वमसि कृपामृतसिन्धुः

मामभिराजम्
निजपदभाजम्
कुरु जननि ! विलीनविलापम् !!

तव जलराशौ लहरिविचलितो मृतकः कदा भवेयम्
भूत्वा नीलजलदजलविन्दुः सलिले कदा पतेयम्

त्वयि निहितमतिः
त्वयि कलितगतिः
क्षपयामि कदा सन्तापम् ?
अयि जननि ! शमय परितापम् !!

## ॥ पञ्चमी गीतिः ॥

चिन्तनीयं सदा मङ्गलं मङ्गलम्
वर्तनीयं सदा मङ्गलं मङ्गलम् ॥

विष्ठया लेपनं भूतले न श्रुतम्
लेपनीयं सदा चन्दनं चन्दनम् ॥

जीवनं दृश्यते विघ्नबाधामयम्
कल्पनीयं सदा नन्दनं नन्दनम् ॥

निन्दया वा परेषां किमास्वाद्यते
कीर्तनीयं सदा वन्दनं वन्दनम् ॥

सिद्धिमार्गे मनस्वी पदातिर्भवेत्
नेक्षणीयं सदा स्यन्दनं स्यन्दनम् ॥

जीवनेच्छा मृता क्वास्ति लोकैषणा
रक्षणीयं सदा स्पन्दनं स्पन्दनम ॥

स्तन्यमाप्नोति बालो न किं रोदनैः
सारणीयं हरौ क्रन्दनं क्रन्दनम् ॥

लीयते नैवजानेऽभिराजः कदा
श्रावणीयं सदा मङ्गलं मङ्गलम् ॥

## ॥ षष्ठी गीतिः ॥

त्वदीयवदनं मया दिने-दिने पीतम् !!

वदनमिदं मृगलाञ्छनकल्पम्
स्नेहसुधामुद्गिरति विजल्पम्

त्वदीयवचनं मया दिने-दिने पीतम् !!

वचनमिदं हृतनिखिलविषादम्
भवभयहरणं शमितविवादम्

त्वदीयनयनं मया दिने-दिने पीतम् !!

नयनमिदं कलकुवलयमूलम्
श्रितहरि नवकालिन्दीकूलम्

त्वदीयहसनं मया दिने-दिने पीतम् !!

हसनमिदं मौक्तिकफलमहितम्
नवकुसुमं विद्रुमसमुपहितम्

त्वदीयरमणं मया दिने-दिने पीतम् !!

रमणमिदं शमितत्रयतापम्
नन्दनवनमिव विभवकलापम्

त्वदीयवदनं मया दिने-दिने पीतम् !!

## ।। सप्तमी गीतिः ।।

नहि जगदतिरुचिरं त्वया विना !
जीवितमपि न चिरं त्वया विना !!

तव भालतिलककृपयाऽनुदिनम्
गगने चकास्ति ननु विधुवदनम्

न भवेन्मधु मदिरं त्वया विना !!

त्वदधरयुगलेन विशदविमलम्
उपमानभाग्भवति विम्वफलम्

विजनं लसदजिरं त्वया विना !!

तव नयनभङ्गलीलाललितम्
दृश्यतेऽखिलं वलितं-वलितम्

गायनमपि बधिरं त्वया विना !!

तव पाणिसरोरुहसंस्पृष्टम्
वपुरिदं भाति सुधयाऽऽविष्टम्

यौवनमपि विधुरं त्वया विना !!

तव मधुरस्मृतिलालसाऽलसम्
चैतन्यमिदं वरतनु ! विवशम्

दिनमपि निर्मिहिरं त्वया विना !
नहि जगदतिरुचिरं त्वया विना !!

## ॥ अष्टमी गीतिः ॥

ग्रामाद् बहिर्वहति पानीय
दयितो गृहे पिपासुः !
चल पानीयकघट्टं वधुके !
चल पानीयकघट्टम् !!

द्रुतपदगमना गुण्ठितवदना प्रचलितकनकशलाका
गच्छति गौरी ललितकिशोरी नभसि विभाति वलाका !!

वामभुजान्तरवेष्टितकलशा त्रपाऽवनततनुकाया
पुरुषनिकायं हृदि सन्दधती प्रकृतिसहचरी माया !!

त्वया समं प्रचलति सुन्दरता धृतदुकूलपरिधाना
हसति विविधकुसुमान्वितवाटी मञ्जुलमधुकरगाना !!

क्वणति कङ्कणं कलितझणझणं निनदति नूपुरपूरम्
शरदिन्दूपमविशदललाटे भाति सुभगसिन्दूरम् !!

दर्शं दर्शं त्वामतितर्षं पथिकोऽनुभवति हाले !
मुषितं छलितं मनसि विदलितं कलयति निजमयि बाले !!

## ॥ नवमी गीतिः ॥

पिपासा वर्धते कामं शुभे ! मे देहि पानीयम् !!

न रात्रौ शं न सन्ध्यायां दहत्यङ्गानि शीतांशुः
ध्रुवं स्फोटायते तारा शुभे ! मे देहि पानीयम् !!

वचो मे निष्क्रियं जातं विनाशं सङ्गता दृष्टिः
चिकीर्षाऽसौ दिवं याता शुभे ! मे देहि पानीयम् !!

त्वदाच्छन्नो ममात्मायं त्वदामृष्टं शरीरम्मे
स्वरूपम्मे त्वदालीनं शुभे ! मे देहि पानीयम् !!

व्यतीता मे कियन्तस्ते वसन्ता दावसंकाशाः
प्रतीता तामसी राका शुभे ! मे देहि पानीयम् !!

ददे कस्मै नु नैवेद्यं स्वकं हृद्वाहदुःखानाम् ?
विरौम्येष भ्रमद्बाहुः शुभे ! मे देहि पानीयम् !!

कथं शक्नोम्यहं प्राणांस्त्वया भिन्नः समाहर्तुम्
दृशोः कादम्बिनी रूढा शुभे ! मे देहि पानीयम् !!

विनष्टं साम्प्रतं धैर्यं न जीवाशाऽपि निर्विघ्ना
यतेऽहं साग्रहं वृत्त्यै शुभे ! मे देहि पानीयम् !!

॥ दशमी गीतिः ॥

तव चिन्तया विगता निशा तव चिन्तया विगतं दिनम्
तव काम्यया महिता निशा तव काम्यया महितं दिनम् !!

स्नेहो विना क्व नु वर्त्तिकाम्
चन्द्रो विना क्व नु चन्द्रिकाम्
हृदि चिन्तितैरिति मामकं तव चर्यया विगतं दिनम् !!

मकरन्दलोलुपमानसम्
भ्रमरं विलोक्य मदालसम्
अनुभूय कन्दलितां तृषं तव तृष्णया विगतं दिनम् !!

अयि कोपने ! प्रणयच्युते !
श्रृणु कोकिलेन किमुच्यते
अवलोक्य ते कुलिशम्मनश्छलिताशया विगतं दिनम् !!

आसीद् विधे ! कियती त्वरा
रचितेदृशी छलना परा
अनया न कोऽद्य विलीयते इति निन्दया विगतं दिनम् !!

तव कीदृशं हृदयं शुभे !
नहि यत्र हार्दमहं लभे
सोम्नैव निखिलं शोभते इति गाथया विगतं दिनम् !!

## ।। एकादशतमी गीतिः ।।

यत् प्रयाचितं त्वया तत् समर्पितम्मया
यत् प्रयक्षितं त्वया तन्निजीकृतम्मया !!

निन्दयाऽपि किं भवेत् शंसयाऽपि किं भवेत्
यत प्रकल्पितं त्वया तत् समर्थितम्मया !!

दृष्टिरेव तावकी मे रराज नेत्रयोः
यत् प्रदर्शितं त्वया तद् विनिर्मितम्मया !!

दूरगामिनी सृतिर्यन्मिता कियत्पदैः
यत् प्रतिष्ठितं त्वया तत् प्रवर्तितम्मया !!

को न याति विस्मयं ? सत्यपि द्वये तनोः
यन्नु जीवितं त्वया तन्नु जीवितम्मया !!

कीदृशं विलक्षणं प्रीतिबन्धनं प्रिये !
यत्करे धृतं त्वया तद् गले कृतम्मया !!

स्वार्जवं प्रकाशयेदन्यथा कथं जनः ?
यत्कदर्थितं त्वया तत् सदर्थितम्मया !!

## ।। द्वादशतमो गीतिः ।।

याहि दूरं दुराशेऽस्तु तुभ्यं नमः
अद्य जाता चिरञ्जीविनी कल्पना !!
नोच्यते लक्ष्यते नाऽपि सङ्केत्यते
वाचि मे वर्तते केवलं व्यञ्जना !!

प्रेमसिन्धुः समुज्जृम्भते मानसे
याति विस्तारमाकाशमभ्यन्तरे ।
अद्य सम्प्रेक्ष्यते कोऽपि चन्द्रोदयो
भावनाः जायते मे चकोराङ्गना !!

या निशा यापिता धूमदावाग्निभिः
सैव जाता क्षणैरेव कादम्बिनी ।
साम्प्रतं सन्ततं वर्तते वर्षणं
श्रूयते नो मनःकेकिनां क्रन्दना !!

अम्बरक्रोडमारोहतीयं धरा
मञ्जुमाकन्दबाहुं लता संश्रिता ।
धावतीयं सरित् सिन्धुमाह्लादिनी
पूर्यते निर्भरं कस्य नो कामना ?

देवदारुद्रुमक्षीरगन्धं वहन्
उत्तराशानिलो वाति मत्प्राङ्गणे ।
किन्तु नाहं स्थितो रामगिर्याश्रमे
नालकावासिनी प्रोषिता मेऽङ्गना !!

चित्रमेवास्ति यच्चन्द्रिका शीतला
जायते भानुबिम्बच्छटाऽऽमोदिनी ।
चित्रमन्यत्ततोऽप्यूर्ध्वकं यद् विधोः
कौमुदी भाति सन्तापिनी वञ्चना !!

कोऽपि सन्देश आयाति सूर्योदये
पल्लवान्दोलने कोऽपि मौनाग्रहः।
पुष्पमाध्वीं पिबन्ती लसत्तितिली
हन्ति मामद्य नून दग्धदृवञ्चना !!

स्मर्यते किम्मया किञ्च विस्मर्यते
गृह्यते किम्मया किञ्च सन्त्यज्यते ?
न क्षमो ज्ञातुमेतावदप्यस्मि भोः
कीदृशी वन्दना कीदृशी पारणा ??

## ।। त्रयोदशतमी गीतिः ।।

मन्दं मन्दं विरावं रे कुरुतेऽयं पिकः
चित्रं चित्रं प्रभावं रे कुरुतेऽयं पिकः !!

विरहिजनानां स्मरपल्लवनम्
द्विगुणीकृतरतिभावं रे कुरुतेऽयं पिकः !!

युवतिजनानां प्रत्यङ्गं ननु
शतशतहावं भावं रे कुरुतेऽयं पिकः !!

नो जाने कीदृशमिव केषाम्
हृदयेषु प्रस्तावं रे कुरुतेऽयं पिकः !!

स्वयमपहाय विविधतरुवल्लीम्
सहकारं सुरगावं रे कुरुतेऽयं पिकः !!

संवर्धनछलसंस्मृतिभाजाम्
काकानां हृदि दावं रे कुरुतेऽयं पिकः !!

कामसखागमवृत्तं जगताम्
कर्णे धावं धावं रे कुरुतेऽयं पिकः !!

कृष्णतयाऽपि निजाखिलवपुषो
जगति विपाण्डुरभावं रे कुरुतेऽयं पिकः !!

विपदम्भोनिधिसन्तरणार्थम्
स्वरलहरीं लघुनावं रे कुरुतेऽयं पिकः !!

क्वचिदालम्ब्योद्दीप्य कदाचित्
काव्ये द्विविधविभावं रे कुरुतेऽयं पिकः !!

●

## ।। चतुर्दशतमी गीतिः ।।

व्यालीव दशति घनरजनी
दयितो नन्दनन्दनो न सदने !!

नदति निशीथे पापी विपिने कलापी
भयमेति गृहे विधुवदनी
दयितो नन्दनन्दनो न सदने !!

भ्रमति पयोदो वैरी भ्रामयति चपलाम्
यथा तथा श्वसिति विरहिणी
दयितो नन्दनन्दनो न सदने !!

विकलीभवति राधा माद्यति विमूर्च्छति
विलपति जरातुरा जननी
दयितो नन्दनन्दनो न सदने !!

कनकशलाकागृहे सारिकाऽपि मूका
खादति पिबति नहि भगिनी
दयितो नन्दनन्दनो न सदने !!

वंशीवटो विधुरो विधुरा ननु यमुना
विधुरेव भाति गोपगृहिणी
दयितो नन्दनन्दनो न सदने !!

वायस ! निशामय पायसमेव दास्ये
त्वया यदि भवामि कुशलिनी
दयितो नन्दनन्दनो न सदने !!

## ।। पञ्चदशतमी गीतिः ।।

लघु लघु जलद! सलिलमभिवर्षय
हर्षय जगदभिरामं रे !!

घोरं शब्दय शतशतवारम्
बिस्फूर्जय नादय परिवारम्

बहु बहु वितर सुधामभिलषिताम्
नन्दय सकृदविरामं रे !!

त्वामुद्वीक्ष्य विनर्दति केकी
ग्रामटिकासु रटति ननु भेकी

त्वयि मधु ददति शमय समेषाम्
पूरय युवजनकामं रे !!

हिन्दोलनमिह लसति कदम्बे
मानोज्ञकमपि तरुनिकुरम्बे

पथि पथि सरतितरां भूनाशो
भयमुद्वमति निकामं रे !!

खलहृदयोऽभून्मम परदेशो
प्रेषयते न कुशलमपि वेषी

जलधर ! भवसि सहोदरकस्त्वम्
शमयावुत्तमकामं रे !!

यापयितुं कथमपि नहि शक्या
श्रावणरजनिरियं मम कृत्या

कम्पनमेति हृदयमतिकृपणम्
प्रणयतृषं प्रतिग्रामं रे !!

## ।। षोडशतमी गीतिः ।।

मधुपवने रौति कोकिलवाला !!

प्रशिथिलगमना मदकलनयना
सङ्गमनी मधुशाला !!

शं न हृदन्ते स्फुरति वसन्ते
मदयति मधुकरमाला !!

ताम्यति हृदयं शाम्यति न भयम
रजनी भाति विशाला !!

चातकरटितैः श्रुतिसङ्गमितैः
सन्ध्या कठिनकराला !!

धृतसुमजातम् अश्रुस्नातम्
सान्त्वयतीव सहाला !!

पार्वणविधुना प्रविततमधुना
प्राची तिलकितभाला !!

हवनं फलितं भवनं फलितम्
वाटी फलितरसाला !!

### ॥ सप्तदशतमी गीतिः ॥

मधुमासोऽभूद्वृन्दाविपिने
कोकिलोच्चारयति कुहूरुतम् !!

कान्तिर्नवा पलाशपलाशे
नवगन्धः कुसुमे-कुसुमे
कोकिलोच्चारयति कुहूरुतम् !!

चर्चरिकां नृत्यति वनमाली
स्मितं द्रवति राधावदने
कोकिलोच्चारयति कुहूरुतम् !!

कुङ्कुमजलं वमति पिच्कारी
पटवासः प्रसरति गगने
कोकिलोच्चारयति कुहूरुतम् !!

महिलादलं सारयति राधा
हरिः पुरोधाः पुरुषजने
कोकिलोच्चारयति कुहूरुतम् !!

ताण्डवलास्यजनितखेलाभिः
होलाऽञ्चति सदने-सदने
कोकिलोच्चारयति कुहूरुतम् !!

प्रीतिर्मनसि सरसि जलजातम्
प्रभवति सुखं निखिलभुवने
कोकिलोच्चारयति कुहूरुतम् !!

वृन्दाटवी भृशं मञ्जरिता
गन्धं किरति वहति पवने
कोकिलोच्चारयति कुहूरुतम् !!

माद्यति शिशुरथ माद्यति युवकः
वृद्धोऽप्यविरुद्धो मदने
कोकिलोच्चारयति कुहूरुतम् ॥

नीलजला यमुनाऽपि सरागा
भवति साम्प्रतं मदनदिने
कोकिलोच्चारयति कुहूरुतम् ॥

**॥ अष्टादशतमी गीतिः ॥**

करकमले लसति पिचकारी
विहरति मुरारिः ॥

नहि रक्षति परिचयं न शीलम्
पश्यति न वयो गिरिधारी
विहरति मुरारिः ॥

नयनसमक्षं मिलति य एव
रञ्जयति तमेव विहारी
विहरति मुरारिः ॥

वञ्जुलकुञ्जविलीनां राधां
ननु मार्गयते प[ ]चारी
विहरति मुरारिः ॥

प्रतिपदमेव छविर्वसिन्ती
प्रवहति पवनः सीत्कारी
विहरति मुरारिः ॥

दिशा दिशा बहलं पिञ्जरिता
परभृतको विरौति विसारी
विहरति मुरारिः ॥

## ।। एकोनविंशतितमी गीतिः ।।

सखि रे ! समागच्छति श्रावणमास उदारोऽयम्
संवर्धयत्यनङ्गं मानसे !!

चित्तं चोरयते ननु चन्द्रः
मेघो भीषयते किल मन्द्रः

सखि रे ! स्फुरति दामिनो गगने कृताभिसारेयम्
संवर्धयत्यनङ्गं मानसे !!

भवने नैव मम प्राणेशः
श्वासः प्राणेष्वपि नो शेषः

सखि रे ! भाति शर्वरी गूढसपत्नोसारेयम्
संवर्धयत्यनङ्गं मानसे !!

अक्ष्णोरेवास्थितं प्रभातम्
किञ्चिन्नो विद्यतेऽवदातम्

सखि रे ! कान्तं विना भवति संसारोऽसारोऽयम्
संवर्धयत्यनङ्गं मानसे !!

## ॥ विंशतितमी गीतिः ॥

रिम्झिम् वर्षति सजलजलधरो
नृत्यति केकी कानने !!

गर्जति धावति नदति च कूर्दति
तारापथे पयोदो बाले !
अयिभोः शिशुरिव नटति जलधरो
नृत्यति केकी कानने !!

पटहः कोऽपि कोऽपि वरवेणुः
कोऽपि मृदङ्गनिनादो बाले !
अयि भोः स्फुरति दामिनी मध्ये
नृत्यति केकी कानने !!

तारं ताले मन्द्रं विटपे
रुक्षं ह्यचलशिलायां बाले !
अयिभोश्चण्डं पतति जलौघे
नृत्यति केकी कानने !!

प्राच्यसमीरोऽमन्दं प्रवहति
सुखयति तप्तशरीरं बाले !
अयि भोः प्रावृषि कस्य न कुशलं
नृत्यति केकी कानने !!

मा कुरु मानिनि ! यौवनगर्वम्
कान्तं रमय नितान्तं बाले !
अयिभोः क्वैति पुनः सौभाग्यं
नृत्यति केकी कानने !!

## ।। एकविंशतितमी गीतिः ।।

निनदधरो
वितरति पयो न पयोदः !!

किं कुर्वन्तु वराककृषाणाः
सुखयति मनो न पयोदः !!

आषाढेऽपि न वारिदमाला
सर्वत्रैव तृषा विकराला

मध्याह्ने प्रचलति ननु वात्या
रक्षति यशो न पयोदः !!

भूगर्भे बीजानि मृतानि
योगक्षेमसुखानि गतानि

विदहति धरणी विलपति तटिनी
रमयति दृशो न पयोदः !!

चञ्चुपुटं न विकुञ्चति चटका
रोदिति वापी कर्दमतटका

म्लायति नलिनी मृदितमृणाला
नो सान्त्वयति पयोदः !!

अण्डकटाहसदृशमनुदिवसम्
तपति दिगन्तरचक्रमनलसम्

अन्तस्तपनं वहिरपि तपनं
शीतलयति न पयोदः !!

कणशः कणशः शुष्यति लतिका
आहिण्डति विपिने परभृतिका

पीत्कुरुते चातकशिशुरनिशं
नाह्लादयति पयोदः !!

॥ द्वाविंशतितमी गीतिः ॥

विधानं न मंत्रे प्रमाणं न तंत्रे
समाराधनम्मे वृथावन्दितं रे !
अतीतस्मृतिर्नो भविष्यद्गतिर्नो
न मे वर्तमानं सुखस्यन्दितं रे !!

क्वचिच्छारदीये निशीथे निशायां
समाऽऽलोकिता स्वप्नसोपानवीथी

प्रभाते हि जाते विनष्टं नु सर्वं
मनोरञ्जनं मे क्षणे ध्वंसितं रे !!

तुषाराद्रितुल्या विचारोच्चताऽसौ
महाम्भोधिकल्पं गभीरं नु धैर्यम्

न कर्तुं बभूवुः शुभं केऽपि शक्ताः
विधौ भूरिवामे मुधा जीवितं रे !!

निजाभ्यस्तमार्गे विरूढाश्मखण्डान्
अपाकर्तुमेव प्रयत्नानकार्षम्

तदप्यात्तवैरैः सुहृद्भिर्न सोढं
परिव्राजनम्मे सदाऽऽतङ्कितं रे !!

व्यथोच्छूननेत्रैः प्रसूयाश्रुधारां
मयाऽऽवेदिता शुम्भहन्त्र्यै स्वपीडा

परं सैव पीडा ललाटन्तपाऽभूत्
व्यथोत्सारणं मेऽसकृद्वर्धितं रे !!

कियत्योऽपयाता लसच्चैत्रराकाः
कियन्त्येव यातानि चञ्चद्दिनानि

परं स्थाणुभावं गतोऽहं न यातो
ममाश्वासनं नो सुधाऽऽनन्दितं रे !!

## ।। त्रयोविंशतितमी गीतिः ।।

लोकानुरागमूलं लोकाभिशापशूलम्
शीर्षे निधाय सर्वं जीवामि भूतलेऽहम् !!

भवनाङ्गणे कदाचिद् दृष्टा पयोदमाला
प्रपलायिताऽप्यवृष्टिः जीवामि भूतलेऽहम् !!

क्वचिदपि ललाटपट्टे सौभाग्यबिन्दुरासम्
दिवसा गता हि ते नो जीवामि भूतलेहम् !!

छलिता मदीयनिष्ठा पिकबालया कयाचित्
शून्यं विलोक्य नीडं जीवामि भूतलेऽहम् !!

निर्मापितं न जाने केनेदमूर्ध्वहर्म्यम्।
मम खण्डितावशेषे जीवामि भूतलेऽहम् !!

मामाविलय्य कीर्त्यै येयं मुधा प्रयतते
धिक्तां मृगाङ्करात्रिं जीवामि भूतलेऽहम् !!

किं संस्मरामि मधुरं किं विस्मरामि कटुकम्
स्मरणीयतामुपात्तो जीवामि भूतलेऽहम् !!

जानन्ति ते न किञ्चित् प्रथयन्ति मय्यवज्ञाम्
उत्पत्स्यते सधर्मा जीवामि भूतलेऽहम् !!

का मे भुजङ्गतेति प्रश्नं करोति बाणः
हर्षं विलोक्य मूकं जीवामि भूतलेऽहम् !!

कुप्यानि हन्त कस्मै ? भाग्याम्बरे मदीये
ज्योत्स्ना घनैः परीता जीवामि भूतलेऽहम् !!

मन्ये कृतान्तगेहे भ्रान्तास्ति मृत्युबाला
यस्मादहोऽभिराजो जीवामि भूतलेऽहम् !!

## ।। चतुर्विंशतितमी गीतिः ।।

चन्दनं वन्दनं नोऽधिकं रोचते
तापितं शापितं मे मनः क्षोभते !!

पञ्जरस्था शुकी मेऽभवद्वैदुषी
बुद्धिमन्निर्विशेषा स्फुरच्छेमुषी

संशयापन्नभाग्येषु को मोदते ?

नातिरम्यं ममापश्यतां लोचने
नाऽप्यनार्यं मनोऽभूत्प्रमाणं जने

कालिदासो न जाने कथं श्रम्भते !!

याऽनिशं चिन्तिता क्वापि साऽन्यं गता
मत्कृते तुष्यति प्रांशुलभ्याऽक्षता

एकवारं पुनर्दैपको दक्षते !!

सौख्यचन्द्रं समालक्ष्य मे मानसे
दुःखसिन्धुर्न जाने कथं जृम्भते

मूढलोकोऽविजानन् मुधाऽऽलोचते !!

साम्प्रतं भात्यरण्यं निजं मन्दिरम्
माधवाभं च नीलं नभोऽचन्दिरम्

को नु मुक्तिश्रमार्थं भृशं नोदते ??

## ।। पञ्चविंशतितमी गीतिः ।।

सौख्यं गतं भाग्यं गतम्
मन्येऽधुना सर्वं गतम् !!

यस्याः कृते गर्वोऽभवत्
यस्याः कृते सर्वोऽभवत्

प्रेमाद्भुतं तस्याः मृतम् !!

याता निशा कामायनी
आह्लादिनीं रम्या वनी

मध्येपथं श्रान्तोऽभवम् !!

जाने न भोस्ते कीदृशाः
प्रीत्याऽनिशं ये भाविताः

अस्मत्कृते वन्ध्यायितम् !!

सत्यं विना का कल्पना
तथ्यं विना का जल्पना

ज्योतिस्तनोर्धूमैर्वृतम् !!

पुष्टिर्न मे संसारतः
तुष्टिर्न मे शं वाञ्छतः

यद्यच्छ्रितं यत्तद्धृतम् !!

## ॥ षड्विंशतितमी गीतिः ॥

विकसति नहि कुसुमं दिने-दिने
विलसति नहि विपिनं दिने-दिने !!

प्रज्ज्वलितनिदाघे धूसरितम्
जलदागममासे घनभरितम्

रमयति नहि गगनं दिने-दिने !!

मालाकारेण कदापि हृतम्
शिशिरेण कदाचिन्निर्मथितम्

मदयति नहि नलिनं दिने-दिने !!

प्रोषिते वल्लभे जललुलितम्
विपदनलधमशिखयाऽऽकुलितम्

स्नपयति नहि नयनं दिने-दिने !!

विधुविम्बनिभं लाञ्छनमलिनम्
क्वचिदपि पीडया निशानलिनम्

सुखयति नहि वदनं दिने-दिने !!

दैवं प्रतिकूलं यदा भवेत्
सुमनोऽपि च शूलं यदा भवेत्

शमयति नहि वचनं दिने-दिने !!

भवनात् प्रवर्तते शवयात्रा
शिष्यते न हृदि संयममात्रा

द्रढयति नहि भजनं दिने-दिने !!

यदि सन्ति सभायां नो रसिकाः
यदि वा तिष्ठन्ति रहितमसिकाः

कलयति नहि कवनं दिने-दिने !!

॥ सप्तविंशतितमी गीतिः ॥

प्रीतिर्यथा नु बाधते भीतिर्न बाधते
नीतिर्यथा नु बाधते रीतिर्न बाधते !!

पुष्पं बिभेति नान्यतः स्वपालकादृते
गन्धो यथा नु बाधते भृङ्गो न बाधते !!

जाने न हन्त ! पङ्कजैः केषामपाकृतम्
चन्द्रो यथा नु बाधते सूर्यो न बाधते !!

सौभाग्यमेव यत्तया तिर्यग् विलोकितम्
कुब्जं यथा नु बाधते वक्रं न बाधते !!

छिन्नं प्रमोहबन्धनं गोविन्दकाम्यया
सक्तिर्यथा नु बाधते भक्तिर्न बाधते !!

नो सेवतेऽभिराजकं मायामयं छलम्
रागो यथा नु बाधते त्यागो न बाधते !!

## ।। अष्टाविंशतितमी गीतिः ।।

भ्रमर ! तव चिन्तितं नहि जाने !
भ्रमर ! तव काङ्क्षितं नहि जाने !!

सुमकलिकामनुसरसि किमर्थम् ?
गायसि नृत्यसि नटसि किमर्थम् ?

भ्रमर ! तव मन्त्रितं नहि जाने !!

निशि सञ्जाता युवतिरिदानीम्
न पतिष्यति कोऽवैति तदानीम्

भ्रमर ! तव रञ्जितं नहि जाने !!

अभिमतमस्या वातविहरणम्
दिशि-दिशि मधुमयगन्धवितरणम्

भ्रमर ! तव जल्पितं नहि जाने !!

ख्यातो जगति तव व्यभिचारः
क्षणिक एष विनतो व्यवहारः

भ्रमर ! तव कल्पितं नहि जाने !!

अयि वैधेय ! विरम-विरम त्वम
मा खण्डय कलिकारुचिरत्वम्

भ्रमर ! तव जीवितं नहि जाने !!

## ।। एकोनत्रिंशत्तमी गीतिः ।।

मया जीवनेऽपेक्षितं भो न किं किम् !
मया जीवने प्रेक्षितं भो न किं किम् !!

वसन्तोऽपि दृष्टो लतावल्लरीणाम्
मृगाङ्कोऽपि दृष्टः स्फुरत्कौमुदीनाम्

निदाघाग्निना ज्वालितं भो न किं किम् !!

श्रितं मेषशावाम्बके यन्ममत्वम्
भृशं सत्कृतं तत् कृपापूततत्त्वम्

परं हिंसकैर्विस्मृतं भो न किं किम् !!

वृता भूरिशस्यैर्धराऽऽलोकितेयम्
खलस्थानके ग्रामलक्ष्मीवृतेयम्

घनैर्लम्पटैर्धर्षितं भो न किं किम् !!

श्रमाम्भःकणे पाटलासारगन्धः
क्वचित्प्रेम्णि पूतेऽनूभूतोऽपि वन्धः

परं दुर्विपाकैः कृतं भो न किं किम् !!

इदानीमपि श्राम्यतीयं न कांक्षा
घृताक्ताग्नितुल्यैधतेऽद्यापि वान्छा

लिपौ वेधसा टङ्कितं भो न किं किम् !!

## ।। त्रिंशत्तमी गीतिः ।।

जीवनं रोचते नो विधानं विना
मोदते नैव हंसो निपानं विना !!

मल्लिकामञ्जरीणां विकासाशया
चञ्चरीको मृतो हन्त पानं विना !!

आगतेयं कुतो मेनका दृक्पथे
खण्डितः कौशिकोऽयं प्रमाजं विना !!

कीदृशीयं शिखाऽग्नेः हृदि प्रोत्थिता
स्वप्नहर्म्यं हुतं तैलदानं विना !!

शास्त्रचर्चां विधत्से सुरामन्दिरे
भासि वन्धो ! पशुस्त्वं विषाणं विना !!

पश्य; दुश्चेष्टितं मृत्तिकामानवः
क्लिश्यते व्योम रोद्धुं विमानं विना !!

चञ्चलैस्ते कटाक्षैर्विचित्रं कृतम्
रोग उन्मूलितो मे निदानं विना !!

रुपभूमौ प्रविष्टो मृगो दिग्भ्रमैः
प्राहरद्भिल्लजा कापि बाणं विना !!

नैव नृत्यं न वाद्यं न वा चर्चरी
उत्सवः कीदृशोऽयं वितानं विना !!

वायसानां कुले पालितेयं पिको
ज्ञायते तत्कथं कण्ठगानं विना !!

धर्षिता हिंस्रजीवैः समाजाटवी
शक्यते नैव गन्तुं कृपाणं विना !!

पूर्वजन्मार्जितप्रीतिपूतान्तरम्
कोऽभिराजं निबध्नाति दानं विना !!

## ।। एकत्रिंशत्तमी गीतिः ।।

स्वप्नेषु गता रजनी चिन्तासु गतं दिवसम्
न तथापि मया दृष्टम् आकाशगतं कुसुमम् !!

या कापि वृता सरणिः द्वैध ननु सैव गता
तर्केषु विलीनाऽऽस्था लब्धं न मया कुसुमम् !!

क्रीतं कलधौतधिया यदपि प्रसभं विपणौ
ननु लौहमदो जातं घ्रातं न मया कुसुमम् !!

यदतीत्य न पुनराप्तं यदमेयसुखं जातम्
तद्बाल्यमपि क्षपितं स्पृष्टं न मया कुसुमम् !!

सुखवैभवसिन्धुरहो चुलुकैः कथमेतु गले
अतिशायि मतं भाग्यं भुक्तं न मया कुसुमम् !!

लघुना चषकेण पिबेत् सलिलं कियदभिराजः
अनुभूय ललाटलिपिं हृदये न धृतं कुसुमम् !!

## ।। द्वात्रिंशत्तमी गीतिः ।।

आसाद्य मामकीनं सदनं न मोदते कः ?
आलोक्य वर्तमानं विगतं न ढौकते कः ??

नागरजनोचिता नो हृत्तोषिणी व्यवस्था
अनुभूय संविधानं कृपणं न कल्पते कः ??

पानाय मल्लको नो पात्रं न भोजनाय
स्यूतानि चीवराणि श्रित्वा न लज्जते कः ??

भूषितकुटुम्बिसंधां विलसत्करेणुरम्याम्
मशकैकधर्मशालां दृष्ट्वा न खिद्यते कः ??

अवलम्बितं मृदङ्गं प्रसमीक्ष्य नागदन्ते
आचार्यतां मदीयां गाने न मन्यते कः ??

कतिचिद् विलोक्य शावान् शुकजान् पञ्जरस्थान
निहतार्थकप्रलापान् हृदि नैव जल्पते कः ??

गृहिणी गृहं यदुक्तं विद्वज्जनैः पुराणैः
अभिराजमेत्य सत्यं तदहो न लोकते कः ??

## ।। त्रयस्त्रिंशत्तमो गीतिः ।।

शोभते नहि राका शशिना विना
मोदते नहि राका शशिना विना !!

वनिकायां फुल्लन्ति सुमानि
माधुरी न गृहीता ह्यलिना विना !!

प्रीतिरसौ ननु कस्य न वन्द्या ?
नो नलिन्यवदाता रविणा विना !!

बन्धुजनेऽपि चरस्यपकारम्
क्वेदृशी कलाऽधीता कलिना विना !!

यद्धि निपीय सहजपरितोषः
सा तृषा न परीता मधुना विना !!

स्यात्कियदेव सुखं धनमहितम्
पूर्णता नहि जाता हरिणा विना !!

को नु लिखति रामायणगीताम्
शारदा न विभाता कविना विना !!

अभिराजस्य गलज्जलिकेयम्
नो पदं हृदि नीता गुणिना विना !!

## ।। चतुस्त्रिंशत्तमो गीतिः ।।

तादृशं नहि जीवनं मे यादृशं परिकल्पितम् !!

रागिणी सन्ध्याऽऽगता चन्द्रोदयोऽपि पदं दधे
किन्तु नष्टं नो तमो दौर्भाग्यबाहुवशीकृतम् !!

ध्वांक्षनीडे पोषणं समवाप कथमपि कोकिलः
किन्तु निहतं मङ्गलं प्रवितत्य मधुरिमजल्पितम् !!

दग्धमेतन्मानसं धूमोऽम्बरेऽपि समुच्छ्रितः
निर्मिता कादम्बिनी न तथापि जनितं वर्षणम् !!

ते गता दिवसा मदीया मातृसौख्यविनोदिताः
दुर्दिनं प्रभवत्यहो परितोऽपि कुटिलं सन्ततम् !!

नो विनिन्दति वेधसं न जनं समाजं नो लिपिम्
जीवनं मनुतेऽभिराजो दुःखसुखयुगलाञ्चितम् !!

४

॥ पञ्चत्रिंशत्तमी गीतिः ॥

मनसि वचसि करणे यदि न भवेदमृतम्
क्षपयति सुरतटिनी नहि नहि नहि दुरितम् !!

किं लङ्काधिपतेस्त्रिदशजयित्वेन ?
रघुनन्दनसदृशं यदि न सुभगचरितम् !!

सोरस्ताडं भोः किं क्रियते घोषः ?
उपकारो न कथं व्यवह्रियते निभृतम् !!

देवगृहेऽप्यविता शुध्यति नो मदिरा
दुष्यति नहि रत्नं यदि गोमयपतितम् !!

प्रकृतिविकृतियुगले महनीयं प्रथमम्
नो जगतामिष्टं भवति यतो विकृतम् !!

संगच्छध्वं भोः त्वय्यादिशति दृढम्
नेतृत्वं तनुते पूर्वपुरुषचरितम् !!

अभिराजोऽपि न किं साधु विजानीते
अस्ति नयनसुभगे जगति कियच्छलितम् !!

## ।। षट्त्रिंशत्तमी गीतिः ।।

नहि सम्प्रति वाचि मनो रमते
प्रभवन्नपि नैव विधिर्दयते !!

न च सा सरसी नलिनी न च सा
कलहंसकथा न च सा सरसा

निखिलं स्मृतिमात्रगतिं तनुते !!

न च सा वनिका न च सा मदिरा
मधुगन्धपरा न च ते भ्रमराः

प्रसृतं विषमेव कथं ह्यमृते ?

रुचिता न वनो किल माधवनी
क्व नु पण्डितराजवृता यवनी ?

प्रतितं भुवि भस्म शवे ज्वलिते !!

वहुकांक्षितलक्ष्यपरं यतनम्
इयदेव करे मनुजस्य धनम्

क्व घटो ननु रज्जुगुणे त्रुटिते !!

यदपि प्रभुणा सहजं जनितम्
नहि किं भुवि कालवशं गमितम्

क्षणभङ्गुरतैव दृढं प्रथते !!

## ॥ सप्तत्रिंशत्तमी गीतिः ॥

विज्ञाय कूपकं पुरा तातेन निर्म्मितम्
क्षारं जलं कदापि मया नो गले कृतम् !!

एतावदेव मर्म मम प्राणधारणे
सूर्योदयाय नैव तमो हन्त ! पूजितम् !!

भेदं सदाऽऽम्रतिन्तिडीकयोः प्रकुर्वता
कस्यापि सम्मुदे न मयाऽसाधु साधितम् !!

अस्मिन् युगे ममापि कथं प्रोन्नतिर्भवेत्
अन्यन्निधाय मानसे नान्यत् प्रवर्तितम् !!

आस्तीर्य वचोवागुरां चुम्बन्ति तेऽम्बरम्
शास्त्रानुशीलनेन हन्त ! किम्मया कृतम् !!

अन्ते यशस्विनी चिरं जाता न मित्रता
कस्यापि दुर्विषान्तरं नाभूत्पयोमुखम् !!

कीरस्तु पञ्जरे कृतो वाणीगुणोद्यमैः
काकाय साग्रहं घृतौदनं समर्पितम् !!

लज्जामहो विहाय नो लोकं जिगाय कः ?
मूढेन मया किन्न लज्जयैव नाशितम् ??

जाताऽभिराजवन्दना देवेषु निष्फला
तुष्टेन किन्तु मानवेन साधु पूरितम् !!

## ॥ अष्टात्रिंशत्तमो गीतिः ॥

अभिरुचितं सततं कृतम्मया
अभिरुचितम् !!

अन्यैः पठिता भगवद्गीता
रम्भाशुकचरितं श्रितम्मया
अभिरुचितम् !!

अन्यैर्वृता प्रशासनसेवा
यवनीकरकमलं वृतम्मया
अभिरुचितम् !!

अन्यैः शाङ्करमतं गृहीतम्
लौकायतिकं ननु मतम्मया
अभिरुचितम् !!

अन्यैर्गृहे धृतो धनराशिः
ताम्बूलं वदने धृतम्मया
अभिरुचितम् !!

अन्यैः परितोषितः समाजः
अन्तःकरणं तोषितम्मया
अभिरुचितम् !!

## ।। ऊनचत्वारिंशत्तमी गीतिः ।।

भावाकुलं विमूढमनो मन्दुरायते
नो ज्ञायते कथं नु जगद् दुर्विषायते !!

उद्दामदावदग्धदिशो निर्जला नदी
निखिलं कुरङ्गकस्य कृते वागुरायते !!

प्रतिमुण्डकं विभिन्नमतिर्गर्भिताऽऽग्रहैः
भव्यं न भारतस्य हन्त सत्फलायते !!

मधुमक्षिकाभिरद्य सुधा सञ्चिता श्रमैः
दृष्ट्वैव कस्य लोलतृषा न ध्वजायते !!

चुम्बन्ति के न नीलनभो वञ्चनापराः
दाक्षिण्यसत्यपक्षधरं को नु त्रायते ??

ता एव चारुचैत्रनिशाः संस्तुतः प्रियः
रेवातटे तथापि मनश्चञ्चलायते !!

श्वोभावतां भजन्ति जना ज्ञायते न किम्
हृदयाम्बरेऽभिराजगुणश्चन्द्रिरायते !!

## ।। चत्वारिंशत्तमी गीतिः ।।

दोषं मलं कलङ्कं प्रपुनाति राजनीतिः
किं किं न लोकपुण्यं प्रददाति राजनीतिः !!

निर्भर्त्स्य नीतिमार्गं शप्त्वा च सत्यनिष्ठाम्
गहनं तमोऽपि भानुं विदधाति राजनीतिः !!

पाटच्चरानमान्यान् प्रथितांश्च कामकीटान्
उद्धार्य कर्णधारान् निर्माति राजनीतिः !!

भवितुं न ये महान्तः शेकुर्गुणप्रवालैः
आच्छाद्य तान् सुवस्त्रैर्वितनोति राजनीतिः !!

आहिण्डनं पदातिः कृतवाननारतं यः
आरोह्य तं विमानं प्रहिणोति राजनीतिः !!

बहुगुणमपि प्रमूढं चरणञ्च भूरिपङ्गुम्
कमलापतिं दरिद्रं प्रकरोति राजनीतिः !!

विदुषस्सुतो न विद्वान् न च यान्त्रिकस्य यन्त्री
नेतुस्तु नेतृधुर्यं विचिनोति राजनीतिः !!

कतिचिद्दिनानि लशुनं कस्तूरिकाञ्च कतिचित्
प्रविधाय भिन्नगन्धैर्विवृणोति राजनीतिः !!

कविभिर्विशाखदत्तैर्वाराङ्गनेव दृष्टा
तदपि प्रिया न केषामाभाति राजनीतिः !!

साञ्जलिपुटप्रणामं विनिवेद्य दूरसंस्थम्
अभिराजमिन्द्रजालैर्न दुनोति राजनीतिः !!

## ।। एकचत्वारिंशत्तमी गीतिः ।।

काञ्चनं वभूव यद्गतम्
मामकं तदेव भारतम् !!

युज्यते हिमालयो यदीयरक्षणे
वृद्धिमाप भूतलं यदीयशिक्षणे

वैखरी च यस्य संस्कृतम् !!

अङ्गवङ्गकेरलान्ध्रमध्यभूयुतम्
उत्कलासमोत्तरप्रदेशसम्मतम्

सिन्धुगुर्जराद्रिमण्डितम् !!

क्षालयत्यपां निधिः सदा पदाम्बुजम्
पार्वणेन्दुरश्नुते विशेषकश्रियम्

यन्महः प्रभातनन्दितम् !!

जातिधर्मभारतीपृथक्त्वधर्षितम्
एकसूत्रकल्पितं तथापि जीवितम्

लोकतन्त्रभावनाभृतम् !!

यस्य धूलिकर्दमे विलुठ्य सन्ततम्
ईश्वरोऽपि लीलयाञ्चकार सोऽद्भुतम्

स्वर्गतोऽपि भूरिसौख्यदम् !!

क्वाभिषेकवैभवं क्व काननोद्यमः
राघवस्य नो सुखं न वाऽधिकश्रमः

योगभोगसाम्यशंसितम् !!

दृश्यतेऽधुनाऽपि यत्कदम्बकानने
नन्दनन्दनच्छविस्तु वेणुवादने

भाषते कलिन्दजा श्रुतम् !!

क्रन्दते सुदाम्नि दुर्विपन्नदीनता
द्वारकाधिपे च भाति यत्र बन्धुता

तण्डुलैरवाप्यतेऽमृतम् !!

मेघमण्डलं विलोक्य जीवितप्रियाम्
वक्ति गुह्यको निजां दुरन्तविक्रियाम्

वारिदो वहत्यभीप्सितम् !!

यस्य तीर्थमण्डलं करोति पावनम्
मोक्षदञ्च यत्सुरापगाऽवगाहनम्

गौरवं हि लोकविश्रुतम्
मामकं तदेव भारतम् !!

## ।। द्विचत्वारिंशत्तमी गीतिः ।।

जीवितुं शक्यते नेदृशे भारते !!

नास्ति विद्याकलावैदुषीवन्दना
सर्वतो दृश्यते सम्मता वञ्चना

हन्त ! चञ्चद्विषाणे शशे भारते !!

यत्र पीयूषवृक्षे विषं जायते
गूढमोहान्धकारस्त्विषं त्रायते

विप्रतीपायतौ संक्लशे भारते !!

नेन्द्रिये संयमं कोऽपि कर्तुं क्षमः
गर्भपाते परं शासनस्योद्यमः

शुद्धचारित्र्यकूलङ्कषे भारते !!

पावनी तीर्थभूमिर्विलासावनी
भोगसम्भोगपूर्तिप्रदा काञ्चनी

स्वर्णसारङ्गकेऽञ्चत्तृषे भारते !!

तस्करश्चीयते सांसदः साग्रहम्
नाश्नुते ज्ञानविज्ञानसिन्धुर्गृहम्

सञ्चरद्रावणानां वशे भारते
जीवितुं शक्यते नेदृशे भारते !!

## ॥ त्रिचत्वारिंशत्तमो गीतिः ॥

वर्धते क्षणे-क्षणे पदे-पदे व्यथा
जीवनं कथा !
जीवनं वृथा !!

मानसे किमप्यहोऽन्यदेव पौरुषे
कीदृशी प्रवञ्चनाऽस्ति मानवे कृशे ?

याचना प्रतीयते स्नुतस्तनी पृथा
जीवनं कथा !
जीवनं वृथा !!

स्वार्थगोपितैव भाति चारुमित्रता
रौरवान्तरैव दृश्यते पवित्रता

देववन्दनाऽपि लोभवृत्तिभिःश्लथा
जीवनं कथा !
जीवनं वृथा !!

चत्वरे चतुष्पथे जना निरन्तरम्
मन्दिरे न किन्तु कोऽपि राजते चिरम्

द्रौपदीव भावना दहन्मनोरथा
जीवनं कथा !
जीवनं वृथा !!

आपणे गृहे वने पुरे च गोपुरे
राजनीतिरेव लक्ष्यते स्थिरेऽस्थिरे

क्वास्ति राष्ट्रशम्भुता विदग्धमन्मथा ?
जीवनं कथा !
जीवनं वृथा !!

सत्यमेव दुर्गतं समर्च्यतेऽनृतम्
ज्ञायते परिस्फुटं न केन किं वृतम्

अध्वनि प्रवर्तते जनो यथातथा
जीवनं कथा !
जीवनं वृथा !!

॥ चतुश्चत्वारिंशत्तमी गीतिः ॥

विद्याध्ययनं विना व्यतीतम्
यस्याभिमतं नो सङ्गीतम्

यस्मिन् कला न कापि विलीना धिक् तादृक्षं जीवनम्
ब्रूते धिग् धिग् धिगिति मृदङ्गो धिक् तादृक्षं जीवनम् ॥

ईर्ष्यामर्षे गतिः प्रवृत्ता
स्वप्नेऽपि न वराटिका दत्ता

शक्तिः कोशसञ्चये युक्ता धिक् तादृक्षं जीवनम् ॥

प्रीतं नित्यमकारणवैरम्
परसंतापेऽपरिमितधैर्यम्

स्थैर्यं क्षणमपि नो सौहार्दे धिक् तादृक्षं जीवनम् ॥

पाठं पाठं वेदपुराणम्
जिह्वा ध्रुवमत्येति कृपाणम्

मिथ्या यस्मिन् स्मृतिप्रमाणं धिक् तादृक्षं जीवनम् ॥

आत्मकुटुम्बे यो मोहान्धः
जननिकुरम्बे किल जनुषान्धः

धृतराष्ट्रं दुश्शासनजनकं धिक् तादृक्षं जीवनम् ॥

विद्यामन्दिरपीठासीनः
किन्तूत्कोचसरित्पाठीनः

शाठ्ये धनी पाठने दीनो धिक् तादृक्षं जीवनम् ॥

विहितो नैव कदाप्युपकारः
हृदि सन्निहितोऽमितसंहारः

पारावारो दुष्कृत्यानां धिक् तादृक्षं जीवनम् !!

करुणा कोशे यस्य न लिखिता
जडता यस्य ललाटे जटिता

अद्यावधि नो पठति न पठिता धिक् तादृक्षं जीवनम् !
ब्रूते धिग् धिग् धिगिति मृदङ्गो धिक् तादृक्षं जीवनम् !!

## ॥ पञ्चचत्वारिंशत्तमी गीतिः ॥

तिमिङ्गिलो निगरति लघुमीनम्
धनदो जठरे क्षपयति दीनम्

मरुसिकतायां छलयति हरिणं कुटिला सलिलतृषा
म्रियते जिजीविषा !!

समुद्घोषिता हरिता क्रान्तिः
समजायत दयनीया भ्रान्तिः

भाण्डागारसमाहितमन्नं भवने मरणदशा
म्रियते जिजीविषा !!

द्रुतं भञ्जितास्तटमर्यादाः
ऋग्भूता अभिनयसंवादाः

शतधा द्रवति कुसंस्कृतितटिनी नितरां तटङ्कषा
म्रियते जिजीविषा !!

आहिण्डनं सहति कौन्तेयः
राजसुखं भुङ्क्ते राधेयः

दुश्शासनं शपति जनतेयं पाञ्चालीव कृशा
म्रियते जिजीविषा !!

भस्मासुर इव शिवं स्वतन्त्रम्
दग्धुं धावति किल जनतन्त्रम्

स्वार्थान्धतागिरिजया छलिता नेतारो विवशाः
म्रियते जिजीविषा !!

प्रत्यक्षरं प्रयच्छति लक्षम्
भोजोऽधुनाऽपि नयनसमक्षम्

नैव कवयते नैव च वयते प्रभवो निरङ्कुशाः
म्रियते जिजीविषा !!

राष्ट्रभूमिविक्रयसंलग्नाः
वाहनभोगसमृद्धिनिमग्नाः

संरक्षतां कृते मरणोर्ध्वं वीरचक्रकलशाः
म्रियते जिजीविषा !!

॥ षट्चत्वारिंशत्तमो गीतिः ॥

उज्जयिनी रमयति नहि चित्तम् !
अवलोकयति सजलनयनाभ्यां पथिकोऽसंसक्तम् !!

नहि वसन्तसेना कनकाभा
चारुदत्तके कुसुमितरागा
प्रभवति मृच्छकटिकमिव दिशि-दिशि तदपि च निर्वित्तम् !!

शिप्रापवनचाटुकारित्वम्
मदकलकलितहंसमुखरत्वम्
भाति विपर्यस्तं ननु निखिल कालिदासमुषितम् !!

शुकनासोपदेशभावनया
चन्द्रापीडवदनदर्शनया
कामनया च विलासवतीनां निर्वाणं त्यक्तम् !!

ध्रुवं प्रस्तरीभूय निषण्णः
भाति विक्रमो रहसि विषण्णः
मन्ये रोदिति दर्शं दर्शं राष्ट्रं प्रविभक्तम् !!

उदयनकथासु वासवदत्ता
साक्ष्यविरहिता तत्तेदन्ता
गोपवसतिमात्रेण विशाला घोषवती निरयम् !!

केयमर्धनारीश्वरवृद्धिः
दूरे प्रिया वसति हरसिद्धिः
ननु विनायकस्तनयो जातः पितृविरहैः सततम् !!

कथमिव भवतु मनसि परितोषः
अहमेवास्म्यथवाऽऽश्रितदोषः
श्लोकैरपि शोकं विसहे यत् सहृदयमूल्यमितम् !!

## ॥ सप्तचत्वारिंशत्तमी गीतिः ॥

प्राणसंहरणक्षणे समुपस्थिते
शास्त्रमेव बुभुक्षितैर्नहि भुज्यते !!

अग्न्यभावे कोऽन्वयो वद सम्भवेत्
धूम एव समन्ततः परिलक्ष्यते !!

सन्निकर्षो दर्शने षोढा मतः
एकधापि न किन्तु संसदि विद्यते !!

यो न मञ्चाक्रोशमवगन्तुं क्षमः
नेतृभिस्सरलं विधाय स शिक्ष्यते !!

वाक्छलेन निवारितोऽपि स धार्मिकः
पश्य गोदाकुञ्जमेव समेषते !!

हन्त ! खालिस्तानयाचनया भृशम्
रक्षिभिस्स्वयमेव राष्ट्रमुपेक्ष्यते !!

धूलिधूसरिता निदेशा गान्धिनः
चित्रमेव निधाय फलके पूज्यते !!

तत्र भविता कीदृशी यौवनकथा
यत्र शैशवमेव साधु न भोज्यते !!

प्रश्नमभिराजो नु पृच्छति साग्रहम्
उत्तरं न कथं विचार्य समुच्यते !!

## ।। अष्टचत्वारिंशत्तमी गीतिः ।।

वाञ्छति कोऽपि नवीनविधानम्
कोऽपि याचते खालिस्तानम्
रोदिति गङ्गा द्रवति नगेशः समुच्छलति सिन्धुः
को नु राष्ट्रबन्धुः ??

एकमेव भारतं समेषाम्
एकमेव गौरवं समेषाम्
एकमेव गगनं सर्वेषां स्याद्रविरथवेन्दुः
को नु राष्ट्रबन्धुः ??

वहति मलयजो मन्द मन्दम्
निखिलभूतले किरति मरन्दम्
निखिलराष्ट्रजनसुखसरणीनामेक एव विन्दुः
को नु राष्ट्रबन्धुः ??

सावरकरो भगतसुखदेवौ
अशफाक्उल्लारोशनसिंहौ
भात्यपार्थको जीवनयज्ञस्तैर्विहितो मञ्जुः
को नु राष्ट्रबन्धुः ??

असमपञ्चनदगुर्जरनाम्ना
विख्यातापि धरा न विभिन्ना
मुखनासिकानयनकरशरणं भवति जनोऽपङ्गुः
को नु राष्ट्रबन्धुः ??

सृजति लोकमङ्गलं पवित्रम्
हालाहलं निपीय विचित्रम्
भवति स एव समर्चनपात्रं सदाशिवः शम्भुः
को नु राष्ट्रबन्धुः ??

## ।। ऊनपञ्चाशत्तमी गीतिः ।।

### शं तनोतु संस्कृतम्

ग्रामे-ग्रामे गेहे-गेहे शं तनोतु संस्कृतम्
कर्णे-कर्णे कण्ठे-कण्ठे कं तनोतु संस्कृतम् !!

एकसूत्रतां विधाय
विश्वबन्धुतां निधाय
प्रीतिभा-रतन्नु भारतं करोतु संस्कृतम् !!

वेदसंस्कृतिं प्रसार्य
लोकनिष्कृतिं निवार्य
व्यासवाल्मीकिकालिदासमेतु संस्कृतम् !!

राष्ट्रभारतीमुपेत्य
ज्ञानहीनतामुपेक्ष्य
प्रान्तधर्मजातिदुर्विषं धुनोतु संस्कृतम् !!

सत्यनिष्ठया नलस्य
दाननिष्ठया नृगस्य
धर्मनिष्ठया युधिष्ठिरस्य भातु संस्कृतम् !!

रक्षितं मुनित्रयेण
भाषितं स्वयं हरेण
विद्वदौषधं विपश्चितं वृणोतु संस्कृतम् !!

स्वस्ति वच्मि संस्कृताय
संस्कृतिप्रवर्तकाय
साम्प्रतं पुनः स्वगौरवं विरौतु संस्कृतम्

## ॥ पञ्चाशत्तमी गीतिः ॥

### काव्याली ( कव्वाली)

प्रीतिरास्वद्यते प्राणैः
गीतिरास्वद्यते कर्णैः
शक्तिरास्वद्यते देहैः
भक्तिरास्वद्यते स्नेहैः

घनान्धकारे बलिदीपिकेव वलाहके चञ्चलचञ्चलेव ।
मधौ प्रफुल्ला नवमालिकेव प्रतीयते प्रीतिरियं पुराणी !!

चलं यौवनं चञ्चलं द्रव्यजातं
स्थिरं केवलं प्रेम लोके विशाले !
व्यतीतं न हस्ते न वाऽगामि हस्ते
स्थिरं केवलं प्रेम लोके विशाले !!

धरायां बभूवुः कियन्तो महीपाः
न नामानि तेषां विजानाति कोऽपि !
परं राधिकाऽऽराधने दत्तचित्तो
हरिः स्मर्यतेऽद्यापि लोके विशाले !!

न जितं रमणीहृदयं सदयं नहि येन कटाक्षकलाऽऽकलिता
नहि येन कदापि दृशोर्भरिता कलकुन्तलभारघटा ललिता !
मरुभूमिसदृक्षमपारतृषं विगतं ननु तस्य जनस्य धृतम्
निखिलं खलु जीवितमेव वृथा प्रतिभाति वृथैव तदीयकृतम्

तस्मादेवोच्यते—

भनक्त्यञ्जसा शीतलाम्बुप्रवाहै-
र्गिरिं दुर्धरं निम्नगा शीततोया ।
कवीनां मतेऽसौ नदीप्रेमलीनो
गिरिः पूज्यतेऽद्यापि लोके विशाले !!

॥ बोधकम् ॥

नदति पयोदो निर्भरं वर्षति शीतलवारि ।
नन्दति वसुधाकामिनी रूपमहो सुखकारि ॥
वारिधरो निकषा धरां समुपयाति यन्नाम ।
प्रेम तदेव नु कथ्यते रागमयं शुभधाम ॥

अपि च

न तत्रास्ति माया छलं नैव भेदः
कलङ्को न तस्मिन् लसद्रागचन्द्रे ।
प्रकाशैकरूपो नवाद्वैतभूपः
प्रपूतोऽनुरागोऽस्ति लोके विशाले !!

उषा दृश्यते भानुभावानुबद्धा
चकोराङ्गना रागिणी शर्वरीशे ।
समीरोऽपि लोलो न किं पुष्पवल्ल्यां
समालोक्यतेऽद्यापि लोके विशाले !!

किं जानन्ति भवन्तः ??

किमर्थं गायति भ्रमरः सरागम्
किमर्थं तित्तली चिनुते परागम् ?

किमर्थं केतकी फुल्लति वसन्ते
किमर्थं केकिनी माद्यति वनान्ते ?

किमर्थं याति सिन्धुं धवलगङ्गा
समुद्धतयौवना चञ्चलतरङ्गा ?

किमर्थं लम्बते गगनं धरायाम्
किमर्थं पतति शलभोऽनलशिखायाम् ?

भवतु नाम,

भवेयुः कियन्तोऽपि शाणायमाणाः
समस्यैकमूला महाकारप्रश्नाः ।
परन्तूत्तरं ह्येकमेवास्ति तेषां
मतं केवलं प्रेम लोके विशाले !!

घनाक्षरी

हृदये समुपैति पदं वर्धते शरीरे यत्
नयनाभ्यां नितरां चकास्ति चारुचरणम्
अधरे विम्बप्रतिमे स्मितकैस्तनुते सुषमां
पदयोर्विदधाति मन्दमन्दं गजगमनम् ।

व्याप्नोति ब्रह्माण्डं मुरलीधरवेणुरवैः
कालिन्दीपुलिने सघटयति रतियुगलम्
निखिलसृष्टिमूलं यन्न्यक्कृतभवशूलंयत्
दुःखसुखाद्वैतं तत् प्रेम सौम्यशरणम् !!

तस्मात्

तदेवास्ति मित्रं तदेवास्ति बन्धुः
तदेवास्ति भो ! जीवनाधारहेतुः ।
महैश्वर्यपूतं तदाप्नोतु लोको
विधत्तेऽभिराजो विधानं विशाले !!

## ॥ एकपञ्चाशत्तमो गीतिः ॥

### मातस्तव मङ्गलम् !!

वत्सः पादयोर्लगति
नाग्रे चरणं सरति !
गङ्गा नयने वहति
हन्त ! कीदृशं भवति !

तातो न कथं वदति
अम्बा न कथं लपति ?
कुत्र गम्यते मया
किं विधीयते मया ?

देहि मे त्वमुत्तरम्
देहि मे सदुत्तरम् !
मातस्तव मङ्गलम्
भ्रातस्तव मङ्गलम् !

तात ! तव मंगलम्
जात ! तव मंगलम् !!

यस्मिन् जीवितम्मया
यस्मिन् क्रीडितम्मया !
यस्मिन् क्रन्दितम्मया
यस्मिन् स्पन्दितम्मया !!

यस्मिन् शैशवं गतम्
यस्मिन् यौवनं वृतम् !
यस्मिन् रागिणीकृता
यस्मिन् कामिनीकृता !!

शोकतापहारिण-
स्तद्गृहस्य मङ्गलम् !!

यस्मिन् नर्तितम्मया
यस्मिन् कूर्दितम्मया ।
यस्मिन् तित्तलीग्रहे
बाढं स्पर्धितम्मया !!

मृत्तिकानिशागृहम्
यत्र खण्डितम्मया ।
पुष्पकोरकादिभि-
र्यत्र मण्डितम्मया !!

सप्तपर्णचत्वरे
यत्र निद्रितम्मया ।
गन्धभारभङ्गुरं
यत्र नन्दितम्मया !!

नन्दनातिशायिन-
स्तद्वनस्य मङ्गलम् !!

यत्र मे पितृष्वसा
यत्र जननी च मे !
यत्र मे सहोदरः
यत्र भगिनी च मे !!

कोऽपि मे पितृव्यकः
कोऽपि मातुलश्च मे !
कोऽपि मे पितामहः
केऽपि बन्धवश्च मे !!

यस्मिन् देहबन्धनम्
यस्मिन् स्नेहबन्धनम् !
यस्मिन् रीतिबन्धनम्
यस्मिन् प्रीतिबन्धनम् !!

यस्मिन् नीतिबन्धनम्
यस्मिन् गीतिबन्धनम् !
यस्मिन् शिक्षितम्मया
लोकभीतिबन्धनम् !!

जन्मदायकस्य मे
सत्कुलस्य मङ्गलम् !!

कन्या निर्मिता कथम्
धातर्वच्मि सव्यथम् ?
प्रेष्या सैव हन्त भोः
नैव दारकः कथम् ?

यत्नैरेव पाल्यते
यत्नैरेव रक्ष्यते ।
यत्नैरेव शिक्ष्यते
यत्नैरेव साऽर्प्यते !!

दीना जायते क्वचित्
किन्तु स्थाप्यते क्वचित् !
चित्रं नन्द्यते क्वचित्
चित्रं निन्द्यते क्वचित् !!

यत्समर्च्यते तया
तद् विमुच्यते तया !
यन्न दृश्यते तया
तद्धि लभ्यते तया !!

इन्द्रजालसन्निभं
कन्याजनजीवनम् !
कन्ये ! तव मङ्गलम्
धन्ये ! तव मङ्गलम् !!

जाते ! तव मङ्गलम्
याते ! तव मङ्गलम्
सीते ! तव मङ्गलम्
भीते ! तव मङ्गलम्

वत्से ! तव मङ्गलम्
धत्से नवमङ्गलम् !!

## अभिराज डॉ० राजेन्द्र मिश्र

- पौष कृष्ण पञ्चमी संवत् १९९९ (२६ दिसम्बर ४२ ई०)
- पार्वतीपरमेश्वरौ: अभिराजी देवी मिश्रा / पं० दुर्गाप्रसाद जी मिश्र
- सम्प्रति इलाहाबाद विश्वविद्यालय के संस्कृत-विभाग में अध्यापनकार्यरत।

### पूर्वप्रकाशन : हिन्दी

खण्डकाव्य : वेदना, पनघट, पूर्णकाम, गृहत्याग मुक्तिदूत (हाईस्कूल कक्षा के पाठ्यक्रम में निर्धारित)।

काव्यसंग्रह : मुक्तधारा, दो पात नींबू : तीन पात अमोला, सपनो में डूब गया मन ! पलकों के बन्द द्वार (यंत्रस्थ)।

बालसाहित्य : बच्चो के पाहुन, पढो और बनो, वन के गीत–मन के मीत, नयाविहान, तितली के पंख, महाभारत की किशोरकथायें।

उपन्यास : बिधवा (आञ्चलिक)

### संस्कृतरचनायें :

दृश्यकाव्य : नाट्यपञ्चगव्यम्, अकिञ्चनकाञ्चनम्, नाट्यपञ्चामृतम्, चतुष्पथीयम्, प्रमद्वरा (नाटिका)।

श्रव्यकाव्य : आर्यान्योक्तिशतकम्, नवाष्टकमालिका, पराम्बाशतकम्, वाग्वधूटी (काव्यसंकलम्) जानकीजीवनम् (महाकाव्यम्) अभिराजत्रिशती (यंत्रस्था) मृद्वीका (यंत्रस्था)

पाठ्यग्रंथ : किरातार्जुनीयम्, छन्दोऽलङ्कारसौरभम्, कादम्बरीकथामुखम्।

वैजयन्त प्रकाशन, ८ बाघम्बरी रोड, इलाहाबाद